# श्रुतबोधः।

महाकवि श्रीकालिदास विरचितः।

पण्डित-कुलपतिना,

वि, ए, उपाधिधारिणा

श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्येण

विरचितया व्याख्यया समलङ्कृतः।

तदात्मजाभ्यां

पण्डित-श्रीआशु-बोध-विद्याभूषण-

पण्डित-श्रीनित्य-बोध-विद्यारत्नाभ्यां

परिवर्द्धितटीकया संस्कृत्य प्रकाशितः।

पञ्चमसंस्करणम्।

कलिकातानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रितः।

ई १९१२।

# श्रुतबोधः ।

—०*०—

मुखबन्धः ।

छन्दसां लक्षणं येन श्रुतमात्रेण बुध्यते ।
तमहं सम्प्रवक्ष्यामि श्रुतबोधमविस्तरम् ॥ १ ॥
संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसम्मिश्रम् ।
विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन ॥ २ ॥
एकमात्रो भवेत् ह्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रकम् ॥ ३ ॥

---

इह खलु तत्रभवान् महाकविः कालिदासः—"सा विद्या नौस्तितीर्षूणां गम्भीरं काव्यसागरम्" इत्यादिप्राचीनवचनप्रामाण्येन छन्दोज्ञानस्य काव्यशास्त्रमधीयानानाम् एकं मुख्योपायत्वम् अवलोक्य पिङ्गलादिकृतच्छन्दःशास्त्राणां सद्भावेऽपि सुकुमारमतीनां बालानां सहजतः प्रतिपादनाय अनुजिघृक्षुः संक्षेपतः श्रुतबोधं नाम सार्थकनामधेयं छन्दःशास्त्रं विरचयितुं प्रतिजानीते, छन्दसामिति।—येन श्रुतमात्रेण छन्दसां, छन्दांसि नाम नियताक्षरवर्णमात्रादिसन्निवेशवशात् चतुश्चरणबद्धानि पद्यानि, तेषां, लक्षणं बुध्यते ज्ञायते, अहं कालिदासः तम् अविस्तरं संक्षिप्तं श्रुतबोधं नाम छन्दोग्रन्थं सम्प्रवक्ष्यामि ॥ १ ॥

तत्र छन्दः लघुगुरुवर्णानां परिज्ञानमन्तरेण न सम्यक् अवगन्तुं सुकरम् इत्युपोद्घातसङ्गत्या तानेव आदौ निर्वक्ति, संयुक्ताद्यमिति।—संयुक्तस्य वर्णस्य आद्यं पूर्वं ह्रस्वमपीति शेषः, दीर्घं दीर्घत्वेन परिगणनीयं, सानुस्वारम् अनुस्वारान्वितं तथा विसर्गसम्मिश्रं सविसर्गम् अक्षरं लघ्वपीति शेषः, गुरु विज्ञेयं बोध्यम्। पादान्तस्थं श्लोकस्य चतुर्थो भागः पादः, तस्य अन्तस्थं शेषाक्षरं लघु सदपि विकल्पेन गुरु ज्ञेयम्। यत्र गुरुत्वमावश्यकं तत्र तत् गुरु गण्यम्, अन्यथा लघ्वेव स्थितमिति भावः। अत्र "संयुक्ताद्यं दीर्घम्" इति यदुक्तं तत्तु "प्रह्रे वा" इति पिङ्गलमुनेः विकल्पविधायकसूत्रसद्भावात् प्रह्रशब्दयोः पूर्वस्य विकल्पेन लघुता बोद्धव्या। तथा च,—"गृहीत-प्रत्युद्गमनीयवस्त्रा" इति कुमारः; "झटिति प्रविश गेहम्" इति उद्भटः; "प्राप्य नाभिह्रदमज्जनमाशु" इति माघः। एतेषु लघुता द्रष्टव्या, अन्यथा छन्दोहानिरिति दिक् ॥ २ ॥

जातिवृत्तभेदेन छन्दसः द्वैविध्येऽपि सूचीकटाहन्यायेन पूर्वं जातिं लक्षयितुं तदनुगुणां मात्रां प्रदर्शयति, एकमात्र इति।—ह्रस्वः ह्रस्वो वर्णः पूर्वोक्तलक्षणान्वितः एकमात्रः एका मात्रा—"मात्रा तु यावता पाणिः पर्य्येति जानुमण्डलं। ताव-

रसज्ञाविरतिस्थानं कविभिर्यतिरुच्यते।
सा विच्छेद-विरामादि-संज्ञाभिरुपदिश्यते ॥ ४ ॥

आर्या (जातिः)।

यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या ॥ ५ ॥

गीत्युपगीती।

आर्यापूर्वार्द्धसमं द्वितीयमपि भवति यत्र हंसगते !।
छन्दोविदस्तदानीं गीतिं तामभृतवाणि ! भाषन्ते ॥ ६ ॥

---

त्कालो भवेन्मात्रा" इत्युक्तलक्षणः कालः मात्रा। तादृशोच्चारणकालः यस्य सः तादृशः भवेत्; ह्रस्वे एका मात्रा तिष्ठति इत्यर्थः। तथा दीर्घो वर्णः द्विमात्रः उच्यते, दीर्घे वर्णे मात्राद्वयं वर्त्तते इत्यर्थः। प्लुतस्तु त्रिमात्रो ज्ञेयः, प्लुते वर्णे तादृशमात्रात्रयम्, इति विभावनीयम्। "दूराह्वाने च गाने च रोदने च प्लुतो मतः" इत्यस्य व्यवहारस्थानम्। व्यञ्जनञ्च स्वरहीनमिति शेषः, अर्द्धमात्रकं तादृशार्द्धमात्राविशिष्टं भवेदिति पूर्वेणान्वयः; तथा च व्यञ्जने ह्रस्वोच्चारणकालस्य अर्द्धसमयमुच्चारयितुमपेक्षते। मात्रापरिगणनेऽपि तत्र अर्द्धमात्रा धर्त्तव्या इति संक्षेपः ॥ ३ ॥

सम्यक्छन्दोलक्षणलक्षितेऽपि काव्ये सति यतिभङ्गे न सहृदयानां श्रुतिसुखम् आवहति, इत्यतः यतिमपि लक्षयति, रसज्ञेति।—रसं जानाति वेत्ति इति रसज्ञा जिह्वा, तस्याः विरतिः विश्रामः तस्य यत् स्थानं तत् कविभिः यतिः इति उच्यते। यत्र हि समागत्य जिह्वा विरमति, तदेव यतिस्थानम् इति। सा यतिः विच्छेदविरामादिसंज्ञाभिरपीति शेषः, उपदिश्यते निरूप्यते इति यावत् ॥ ४ ॥

जातिनामकच्छन्दसाम् अवान्तरभेदभूयस्त्वेऽपि आर्यालक्षणपरिज्ञानेन सकलपरिज्ञानसम्भवात् तामेवादौ लक्षयति, यस्या इति।—यस्याः प्रथमे आद्ये पादे चरणे तथा तृतीयेऽपि पादे द्वादश मात्राः सम्भवन्ति, द्वितीये पादे अष्टादश मात्रा इति शेषः, तथा चतुर्थके पादे पञ्चदश मात्रा इति शेषः, सा आर्या नाम छन्दः। उदाहरणन्तु लक्षणमेव बोध्यम्। एवं सर्वत्र। एतेन आर्यायां सप्तपञ्चाशन्मात्राः सम्भवन्ति इति सूच्यते। वृत्तरत्नाकरादौ प्रथमतः जातेः आर्यागीतिभेदेन द्वैविध्यमुक्तम्; आर्यायाश्च—पथ्या-विपुला-चपला-मुखचपला-जघनचपलाभेदेन पञ्चधा; गीतेश्च,—गीत्युपगीत्युद्गीत्यार्यागीतिभेदेन च चातुर्विध्यम्। अस्याः खलु जातेः प्रथमभेदभिन्नायाः आर्यायाः प्रथमभेदान्तर्गतपथ्यायामन्तर्भाव इत्यवगन्तव्यम्। विपुलादिभेदस्तु प्रायशः प्रयोगविरहादुपेक्षितः ॥ ५ ॥

तत्र जातेः द्वितीयभेदेषु गीतिं लक्षयति, आर्येति।—हे हंसगते ! राजहंसगामिनि ! [कान्तासम्बोधनमिदम्]। यत्र आर्यायाः पूर्वार्द्धेन समं तुल्यं पूर्वार्द्धे यथा

आर्य्योत्तरार्द्धतुल्यं प्रथमार्द्धमपि प्रयुक्तं चेत्।
कामिनि! तामुपगीतिं प्रतिभाषन्ते महाकवयः ॥७॥

पञ्चाक्षरा वृत्तिः।

आद्यचतुर्थं पञ्चमकं चेत्।
यत्र गुरु स्यात् साक्षरपङ्क्तिः॥ ८ ॥

षडक्षरा वृत्तिः।

अगुरु चतुष्कं भवति गुरू द्वौ।
घनकुचयुग्मे! शशिवदनाऽसौ ॥ ९ ॥

सप्ताक्षरा वृत्तिः।

तुर्य्यं पञ्चमकं चेद्‌ यत्र स्याल्लघु बाले!।
विद्वद्भिर्मृगनेत्रे! प्रोक्ता सा मदलेखा ॥ १० ॥

अष्टाक्षरा वृत्तिः।

श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्।
द्विचतुःपादयोः ह्रस्वं सप्तमं दीर्घमन्ययोः ॥ ११ ॥

---

द्वादश मात्रा अष्टादश मात्राश्च तत्तुल्यम् इत्यर्थः, द्वितीयं परार्द्धमपि भवति, हे अमृतवाणि! तदानीं छन्दोविदः छन्दःशास्त्रज्ञाः तां गीतिं भाषन्ते कथयन्ति ॥ ६ ॥

तत्रापि उपगीतिमाह, आर्य्येति।—हे कामिनि! प्रथमार्द्धमपि आर्य्याया उत्तरार्द्धेन द्वादशपञ्चदशमात्राग्रथितेन इति भावः, तुल्यं प्रयुक्तं रचितं चेत्, महाकवयः ताम् उपगीतिं प्रतिभाषन्ते। तथा आर्य्यायाः पूर्वार्द्धपरार्द्धयोः वैपरित्येन वर्णने उद्गीतिः; गीतेः तृतीयचतुर्थपादयोः प्रत्येकं मात्राद्वयम् अधिकं चेदार्य्यागीतिः बोध्यव्या, इत्यस्या एव प्रपञ्च इत्युपेक्षितः ॥ ७ ॥

छन्दःसु वृत्तानि लक्षयितु वैचित्र्याभावात् चतुरक्षरपादपर्य्यन्तं विहाय पञ्चाक्षर-पादमाह, आद्येति।—आद्यं चतुर्थं पञ्चमकञ्च यत्र गुरु स्यात्, द्वितीयतृतीयौ च लघू इति शेषः, सा अक्षरपङ्क्तिर्नाम छन्दः।—"भगौ गिति पङ्क्तिः" इति वृत्त०रत्ना०॥८॥

षडक्षरपादवृत्तमाह, अगुर्विति।—हे घनकुचयुग्मे! निविड़स्तनयुगले! यत्र अगुरु लघु चतुष्कं चत्वारो वर्णा लघव इत्यर्थः भवति, द्वौ वर्णौ गुरू च भवतः, असौ शशिवदना नाम छन्दः।—"शशिवदना न्यौ" इति वृ० र० ॥ ९ ॥

सप्ताक्षरपादमाह, तुर्य्यमिति।—हे मृगनेत्रे! बाले! यत्र तुर्य्यं चतुर्थं पञ्चमकञ्च लघु स्यात्, अपरे पञ्च वर्णा गुरव इति शेषः, विद्वद्भिः पण्डितैः सा मदलेखा प्रोक्ता कथिता।—"म्सौ गः स्यान्मदलेखा" इति वृ० र० ॥ १० ॥

अष्टाक्षरपादं वृत्तचतुष्टयमाह चतुर्भिः श्लोकैः। श्लोके इति।—श्लोके लोकव्यवहार-

आदिगतं तुर्य्यगतं पञ्चमकं चान्त्यगतम्।
स्याद् गुरु चेत् संकथितं माणवकाक्रीड़मिदम्॥ १२॥
द्वितुर्य्यषष्ठमष्टमं गुरु प्रयोजितं यदा।
तदा निवेदयन्ति तां बुधा नगस्वरूपिणीम्॥ १३॥
सर्वे वर्णा दीर्घा यस्यां विश्रामः स्याद्वेदैर्वेदैः।
विद्वद्वृन्दैर्वीणावाणि! व्याख्याता सा विद्युन्माला॥ १४॥

नवाक्षरा वृत्तिः।

चम्पकमाला यत्र भवेदन्त्यविहीना प्रेमनिधे!।
छन्दसि दक्षा ये कवयस्तन्मणिमध्यं ते ब्रुवते॥ १५॥

---

सिद्धया अनुष्टुभा रचिते पद्ये इति भावः। यद्यपि अनुष्टुभः भेदान्तर्गतानि अष्टाक्षरपादानि षट्पञ्चाशदधिकशतद्वयं छन्दांसि, तथापि वक्त्रापरनामादौ अनुष्टुभि तथात्वं बोध्यम्। सर्वत्र षष्ठं गुरु, पञ्चमं लघु ज्ञेयम्। अथवा सर्व्वत्रेति षष्ठमित्यनेनान्वयि, पञ्चमस्य तु सर्व्वत्र लघुत्वे व्यभिचारात्। तथा च—"यियक्षमाणेनाहूतः" इति माघः। "पुनश्च गौरीदेहा सा" इति चण्डी। तथा द्विचतुःपादयोः द्वितीयचतुर्थयोः पादयोः सप्तमं ह्रस्वम्, अन्ययोः प्रथमतृतीययोः पादयोः सप्तमं दीर्घं ज्ञेयम्।—"पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः। षष्ठं गुरु विजानीयात् एतत् पद्यस्य लक्षणम्॥" इति पाठान्तरं क्वचित्। अस्य तु वक्त्रं नाम। लोके च अनुष्टुभ् इति प्रसिद्धम्। यदाह छन्दोमञ्जर्य्याम्,—"लोकेऽनुष्टुभ् इति ख्यातं तस्याष्टाक्षरता मता" इति। अन्यत्र वर्णेषु ह्रस्वदीर्घयोः नियमो नास्ति इति महाकविस्वरसोऽत्र परिलक्ष्यते। "शेषेष्वनियमो मतः" इति छन्दोमञ्जर्य्युक्त्या सह एकवाक्यत्वात् इति विभावनीयम्॥ ११॥

आदिगतमिति।—आदिगतं तुर्य्यगतं चतुर्थम् इत्यर्थः, पञ्चमकं तथा अन्त्यगतम् अष्टममित्यर्थः गुरु स्यात् चेत् अपरे चत्वारो वर्णाः लघव इति भावः, इदं माणवकाक्रीड़ं नाम छन्दः संकथितम्।—"भात् तलगा माणवकम्" इति वृ० र०॥ १२॥

द्वितुर्य्येति।—यदा द्वितुर्य्यं षष्ठं द्वितीयचतुर्थषष्ठं तथा अष्टमं गुरु प्रयोजितम्, अपरे चत्वारो वर्णा लघव इति भावः, तदा बुधाः तां नगस्वरूपिणीं निवेदयन्ति।—"प्रमाणिका जरौ लगौ" इति वृ० र०॥ १३॥

सर्वे इति।—यस्यां सर्वे अष्टावित्यर्थः वर्णाः दीर्घाः, वेदैर्वेदैः चतुर्भिश्चतुर्भिः विश्रामः यतिश्च स्यात्, हे वीणावाणि! वीणावत् मधुरस्वरे इत्यर्थः, विद्वद्वृन्दैः सा विद्युन्माला व्याख्याता।—"मो मो गो गो विद्युन्माला" इति वृ० र०॥ १४॥

नवाक्षरपादमाह, चम्पकमालेति।—यत्र चम्पकमाला वक्ष्यमाणा अन्त्यविहीना

दशाक्षरे वृत्ती।

तन्वि ! गुरु स्यादाद्यचतुर्थं पञ्चमषष्ठं चान्त्यमुपान्त्यम्।
इन्द्रियवाणैर्यत्र विरामः सा कथनीया चम्पकमाला॥ १६ ॥
मन्दाक्रान्तान्त्ययतिरहिता सालङ्कारे ! यदि भवति या।
सा विद्वद्भिर्ध्रुवमभिहिता ज्ञेया हंसी कमलवदने !॥ १७ ॥

एकादशाक्षरा वृत्तयः।

ह्रस्वो वर्णो जायते यत्र षष्ठः
कम्बुग्रीवे ! तद्वदेवाष्टमान्त्यः।
विश्रान्तः स्यात्तन्वि ! वेदैस्तुरङ्गैः
तां भाषन्ते शालिनीं छान्दसीयाः॥ १८ ॥

आद्यचतुर्थमहीननितम्बे ! सप्तमकं दशमञ्च तथान्त्यम्।
यत्र गुरु प्रकटस्मरसारे ! तत् कथितं ननु दोधकवृत्तम्॥ १९॥

---

दशमहीना भवेत्, हे प्रेमनिधे ! छन्दसि दक्षाः ये कवयः, ते तत् छन्दः मणिमध्यं ब्रुवते कथयन्ति।—"स्यान्मणिमध्यं चेद्भमसाः" इति मञ्जरी॥ १५॥

दशाक्षरपादवृत्तद्वयं लक्षयति, तन्वीति द्वाभ्याम्।—हे तन्वि ! कृशाङ्गि ! आद्यं चतुर्थं पञ्चमं षष्ठम् अन्त्यमुपान्त्यं नवमं दशममिति भावः, यत्र गुरु स्यात्, अपरे चत्वारो वर्णाः लघव इति शेषः, यत्र च इन्द्रियबाणैः पञ्चभिः पञ्चभिः विरामः यतिः स्यात्, सा चम्पकमाला कथनीया।—"रुक्मवती सा यत्र भमस्गा" इति छन्दोमञ्जरी॥१६॥

मन्दाक्रान्तेति।—हे सालङ्कारे ! अलङ्कारभूषिते ! या मन्दाक्रान्ता अन्त्ययतिरहिता शेषयतिस्थानभूतानि सप्ताक्षराणि गुरुलघुगुरुगुरुलघुगुरुगुरूणि तैः रहिता इत्यर्थः यदि भवति, तदा हे कमलवदने ! विद्वद्भिः सा ध्रुवं हंसी अभिहिता ज्ञेया।—"ज्ञेया हंसी मभनगयुता" इति मञ्जरी। मन्दाक्रान्तालक्षणमत्र चत्वारिंशश्लोके द्रष्टव्यम्॥ १७ ॥

एकादशाक्षरपादं वृत्तं लक्षयितुमारभते, ह्रस्व इत्यादिना।—हे तन्वि ! यत्र षष्ठो वर्णः ह्रस्वः जायते, हे कम्बुग्रीवे ! शङ्खग्रीवे ! "शङ्खः स्यात् कम्बुरस्त्रियाम्" इत्यमरः। अष्टमान्त्यः अष्टमस्य अन्त्यः नवम इत्यर्थः, तद्वत् ह्रस्व इत्यर्थः, अन्ये नव वर्णा दीर्घा इति भावः, तथा वेदैः चतुर्भिस्तुरङ्गैः सप्तभिश्च विश्रान्तः यतिः, छान्दसीया छन्दोविदः तां शालिनीं भाषन्ते कथयन्ति।—"मात् तौ गौ चेच्छालिनी वेदलोकैः" इति मञ्जरी॥ १८॥

आद्येति।—ननु भोः प्रकटः उत्कटः स्मरस्य कामस्य सारः भावः यस्याः तत्सम्बुद्धौ ; हे प्रबलकामे इत्यर्थः। हे अहीननितम्बे ! गुरुनितम्बे ! यत्र आद्यं

यस्यास्त्रिषट्सप्तममक्षरं स्याद् ह्रस्वं सुजङ्घे ! नवमञ्च तद्वत्।
गत्या विलज्जीकृतहंसकान्ते! तामिन्द्रवज्रां ब्रुवते कवीन्द्राः॥२०॥
यदीन्द्रवज्राचरणेषु पूर्वे भवन्ति वर्णा लघवः सुवर्णे !।
अमन्दमाद्यन्मदने ! तदानीमुपेन्द्रवज्रा कथिता कवीन्द्रैः ॥२१॥

उपजातौ।

यत्र द्वयोरप्यनयोस्तु पादा भवन्ति सीमन्तिनि ! चन्द्रकान्ते !।
विद्वद्भिराद्यैः परिकीर्त्तिता सा प्रयुज्यतामित्युपजातिरेषा ॥२२॥
आख्यानिकी सा प्रकटीकृतार्थे ! यदीन्द्रवज्राचरणः पुरस्तात्।
उपेन्द्रवज्राचरणास्त्रयोऽन्ये मनीषिणोक्ता विपरीतपूर्वा ॥ २३ ॥

---

चतुर्थं सप्तमकं दशमं तथा अन्त्यम् एकादशम् इत्यर्थः गुरु, अन्ये षट् वर्णाः लघव इति शेषः, तत् दोधकवृत्तं कथितम्।—"दोधकवृत्तमिदं भभभाद्गौ" इति वृ० र० ॥१९॥

यस्या इति।—गत्या गमनेन विलज्जीकृता हंसानां कान्तिः शोभा कान्ता वा यया सा हे तादृशि! सुजङ्घे सुष्ठुजङ्घाशालिनि! यस्याः त्रिषट्सप्तमं तृतीयं षष्ठं सप्तमम् इत्यर्थः, तद्वत् नवमञ्च अक्षरं ह्रस्वं स्यात्, अन्ये सप्त वर्णाः लघव इति शेषः, कवीन्द्राः ताम् इन्द्रवज्रां ब्रुवते।—"स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति वृ० र० ॥ २० ॥

यदीदि।—यदि इन्द्रवज्रायाः चरणेषु पादेषु पूर्वे आद्या वर्णाः लघवः भवन्ति, तदानीं हे सुवर्णे! सुरूपे! अमन्दमाद्यन्मदने! अत्युन्मदमदने! कवीन्द्रैः उपेन्द्रवज्रा कथिता।—"उपेन्द्रवज्रा जतजास्ततो गौ" इति वृ० र० ॥ २१ ॥

प्रसङ्गतः उपजातिं लक्षयति, यत्रेति।—हे चन्द्रकान्ते! चन्द्रवन्मनोहरे! सीमन्तिनि! यत्र यस्यां वृत्तौ द्वयोरनयोरपि (अपिरत्र भिन्नक्रमे) इन्द्रवज्रोपेन्द्रयोः अपि [अत्र अपि शब्देन अन्यत्र यत्र जात्यादिषु पादाः लक्षणद्वयलक्षिता भवन्ति तत्रापि उपजातिर्नाम सम्भवति इति महाकवेरभिप्रायः सूच्यते। छन्दोमञ्जर्य्यादावपि तथैवोक्तम्। तथा च—"इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम" इति] पादा भवन्ति, आद्यैर्विद्वद्भिः सा उपजातिरिति परिकीर्त्तिता, एषा वृत्तिरिति शेषः, प्रयुज्यताम्। अनेन उपजातेः सामान्यलक्षणमुक्तम् ॥ २२ ॥

उपजातिसामान्यलक्षणमभिधाय तदवान्तरभेदे वक्तव्ये पिङ्गलाचार्य्यादिभिः आख्यानिकी-विपरीताख्यानिक्योः यादृशं लक्षणं कृतं तद्वैपरीत्यं नापि विपरीताख्यानिक्याः बहुषु दृष्टचरत्वात् स्वाभिप्रेतं विपरीताख्यानिकीलक्षणमाह, आख्यानिकीति।—हे प्रकटीकृतार्थे! प्रकटिताभिप्राये! यदि पुरस्तात् प्रथमः इन्द्रवज्रायाश्चरणः अन्ये द्वितीयतृतीयचतुर्थाः पादाः उपेन्द्रवज्राचरणाः तदा सा विपरीत इति शब्दः पूर्वो यस्याः तादृशी आख्यानिकी, विपरीताख्यानिकी इत्यर्थः, मनीषिणा उक्ता। क्वचित् तु

आद्यमक्षरमतस्तृतीयकं सप्तमञ्च नवमं तथाऽन्तिमम्।
दीर्घमिन्दुमुखि! यत्र जायते तां वदन्ति कवयो रथोद्धताम् ॥२४॥
अक्षरञ्च नवमं दशमञ्च व्यत्ययाद् भवति यत्र विनीते!।
प्राक्तनैः सुनयने! यदि सैव स्वागतेति कविभिः कथिताऽसौ॥२५॥

द्वादशाक्षरा वृत्तयः।

सतृतीयकषष्ठमनङ्गरते! नवमं विरतिप्रभवं गुरु चेत्।
घनपीनपयोधरभारनते! ननु तोटकवृत्तमिदं कथितम्॥ २६ ॥
यदि तोटकस्य गुरु पञ्चमकं विहितं विलासिनि! तदक्षरकम्।

---

"आख्यान-लीलाप्रकटीकृतार्थे!......विपरीतपूर्वा" इति पाठान्तरं दृश्यते। तत्र आख्यान-लीलया वाक्चातुरीभङ्ग्या प्रकटीकृतः अर्थोऽभिलाषो यया, तत्सम्बुद्धौ। अन्यत् समानम्। विपरीतपूर्वा नाम छन्दः इति शेषः। वस्तुतस्तु आख्यानिकी, विपरीताख्यानिकी चेति नाम्ना छन्दोऽयं पैङ्गलादावुक्तत्वात्। तथा च पैङ्गले—"आख्यानिकी तौ ज्गौ ग्, जतौ ज्गौ ग्" ३७। "विपरीताख्यानिकी ज्तौ ज्गौ ग्, तौ ज्गौ ग्" ३८। इति। तत्र—"आख्यानिकी वार्त्ताहारिका उच्यते" इति। "एतयोश्च वक्ष्यमाणोपजात्यन्तर्गतत्वेऽपि विशेषसंज्ञार्थम् ऋद्धसमाधिकारे पाठः" इति हलायुधः। प्राचीनास्तु प्रथम-तृतीययोः पादयोः इन्द्रवज्रायां द्वितीयचतुर्थयोः उपेन्द्रवज्रायां सत्याम् आख्यानिकी छन्दः। प्रथम-तृतीययोः उपेन्द्रवज्रायां, द्वितीयचतुर्थयोः इन्द्रवज्रायां, सत्यां विपरीताख्यानिकी इति कथयन्ति। इति दिक्॥ २३॥

आद्यमिति।—हे इन्दुमुखि! यत्र आद्यम् अतः अस्मात् परं तृतीयकं सप्तमं नवमं तथा अन्तिमञ्च एकादशम् इत्यर्थः, अक्षरं दीर्घं जायते, अन्ये षट् वर्णाः लघव इति शेषः, कवयः तां रथोद्धतां वदन्ति।—"रान्नराविह रथोद्धता लगौ" इति वृ० र०॥२४॥

अक्षरमिति।—हे विनीते! विनयवति! सुनयने! यत्र रथोद्धतायां नवमं दशमञ्च अक्षरं व्यत्ययात् विपर्य्ययात् नवमं लघु दशमञ्च गुर्वित्यर्थः भवति, प्राक्तनैः पूर्वैः कविभिः सैव रथोद्धतैव स्वागता इत्यसौ कथिता।—"स्वागता रनभगैर्गुरुणा च" इति मञ्जरी॥ २५॥

द्वादशाक्षरपादवृत्तं लक्षयितुमारभमाणः प्रथमं तोटकमाह, सतृतीयकेति।—ननु हे अनङ्गरते! कामाविष्टे! घनपीनपयोधरभारनते! सतृतीयकं तृतीयसहितं षष्ठं नवमं विरतिप्रभवं विश्रामस्थानं द्वादशम् इत्यर्थः, चेत् गुरु, अन्ये अष्टौ वर्णाः लघव इति शेषः, तदा इदं तोटकवृत्तं कथितम्।—"वद तोटकमब्धिसकारयुतम्" इति मञ्जरी॥ २६॥

रससङ्ख्यकं गुरु न चेदबले! प्रमिताक्षरेति कविभिः कथिता॥२७॥
यदाऽऽद्यं चतुर्थं तथा सप्तमं स्यात्तथैवाक्षरं ह्रस्वमेकादशाद्यम्।
शरच्चन्द्रविद्वेषिवक्त्रारविन्दे! तदुक्तं कवीन्द्रैर्भुजङ्गप्रयातम्॥२८॥
अयि कृशोदरि! यत्र चतुर्थकं गुरु च सप्तमकं दशमं तथा।
विरतिगञ्च तथैव सुमध्यमे! द्रुतविलम्बितमित्युपदिश्यते॥२९॥
प्रथमाक्षरमाद्यतृतीययोर्द्रुतविलम्बितकस्य हि पादयोः।
यदि नास्ति तदा कमलेक्षणे! भवति सुन्दरि! सा हरिणप्लुता॥३०॥
उपेन्द्रवज्राचरणेषु सन्ति चेदुपान्त्यवर्णा लघवः परे कृताः।
मदोल्लसद्भ्रूजितकामकार्मुके! वदन्ति वंशस्थविलं बुधास्तदा॥३१॥
यस्यामशोकाङ्कुरपाणिपल्लवे! वंशस्थपादा गुरुपूर्ववर्णकाः।
तारुण्यहेलारतिरङ्गलालसे! तामिन्द्रवंशां कवयः प्रचक्षते॥३२॥

---

यदीति।—हे विलासिनि! अबले! यदि तोटकस्य पञ्चमकं (स्वार्थे कः) तत् अक्षरकं गुरु विहितं रससङ्ख्यकं षष्ठं चेत् गुरु न भवति, तदा कविभिः प्रमिताक्षरेति कथिता।—"प्रमिताक्षरा सजससैः कथिता" इति वृ० र०॥ २७॥

यदाद्यमिति।—हे शरच्चन्द्रविद्वेषिवक्त्रारविन्दे! मुखकमलजितशरच्चन्द्रे इत्यर्थः, यदा आद्यं चतुर्थं सप्तमं तथा एकादशस्य आद्यं दशममित्यर्थः, अक्षरं ह्रस्वं स्यात्, अन्ये अष्टौ वर्णाः गुरव इति शेषः, तदा तत् कवीन्द्रैः भुजङ्गप्रयातम् उक्तम्।—"भुजङ्गप्रयातं चतुर्भिर्यकारैः" इति मञ्जरी॥ २८॥

अयीति।—अयि कृशोदरि! सुमध्यमे! तथैव तद्वदेव यत्र चतुर्थकं सप्तमकं तथा दशमं विरतिगञ्च द्वादशम् इत्यर्थः गुरु, अन्यानि अष्टौ लघूनि इति शेषः, तत् द्रुतविलम्बितमिति उपदिश्यते।—"द्रुतविलम्बितमाह नभौ भरौ" इति वृ० र०॥ २९॥

प्रथमेति।—हे कमलेक्षणे! सुन्दरि! यदि द्रुतविलम्बितकस्य आद्यतृतीययोः पादयोः प्रथमाक्षरं नास्ति, तदा सा हरिणप्लुता भवति। अस्यास्तु वृत्तेः प्रथमतृतीयपादयोः एकादशाक्षरतेति बोद्धव्या।—"सयुगात् सलघू विषमे गुरू युजि नभौ भरगौ हरिणप्लुता" इति वृ० र०॥ ३०॥

उपेन्द्रेति।—उपेन्द्रवज्रायाः चरणेषु सर्वेषु पादेषु चेत् यदि उपान्त्यवर्णाः एकादशवर्णा इत्यर्थः लघवः, परे द्वादश वर्णाः कृताः गुरव इति शेषः, तदा हे मदोल्लसद्भ्रूजितकामकार्मुके! बुधाः विद्वांसः तत् वंशस्थविलं वदन्ति।—"जतौ तु वंशस्थमुदीरितं जरौ" इति वृ० र०॥ ३१॥

यस्यामिति।—अशोकाङ्कुरवत् पाणिपल्लवौ यस्याः हे तादृशि! तारुण्येन या

त्रयोदशाक्षरे वृत्ती।

यस्यां प्रिये! प्रथमकमक्षरद्वयं
तुर्य्यं तथा गुरु नवमं दशान्तिमम्।
सान्त्यं भवेद्यतिरपि चेद् युगग्रहैः
साऽऽलक्ष्यताममृतरुते! प्रभावती॥ ३३॥

आद्यं चेत् त्रितयमथाष्टमं नवान्त्यं
द्वावन्त्यौ गुरुविरतौ सुभाषिते! स्यात्।
विश्रामो भवति महेशनेत्रदिग्भि-
र्विज्ञेया ननु सुदति! प्रहर्षिणी सा॥ ३४॥

चतुर्द्दशाक्षरा वृत्तिः।

आद्यं द्वितीयमपि चेद् गुरु तच्चतुर्थं
तत्राष्टमञ्च दशमान्त्यमुपान्त्यमन्त्यम्।
अष्टाभिरिन्दुवदने! विरतिश्च षड्भिः
कान्ते! वसन्ततिलकं किल तं वदन्ति॥ ३५॥

---

हेला विलासविशेषः तया यो रतिरङ्गः तस्मिन् लालसा यस्याः तत्सम्बुद्धौ। यस्यां वृत्तौ वंशस्थस्य पादाः गुरुपूर्ववर्णकाः तेषां प्रथमे वर्णाः गुरवः इत्यर्थः, कवयः ताम् इन्द्रवंशां प्रचक्षते कथयन्ति।—"तच्चेन्द्रवंशा प्रथमाक्षरे गुरौ" इति मञ्जरी॥ ३२॥

इतः त्रयोदशाक्षरपादमाह, यस्यामिति।—हे प्रिये! अमृतरुते! सुधामधुरभाषिणि! यस्यां प्रथमकमक्षरद्वयं प्रथमं द्वितीयम् इत्यर्थः, तुर्य्यं चतुर्थं, नवमं, दशान्तिमम् एकादशं, तथा सान्त्यम् अन्त्येन शेषेण सहितं त्रयोदशसहितम् इत्यर्थः गुरु, अन्यानि सप्त लघूनि इति शेषः, युगग्रहैः चतुर्भिर्नवभिश्च यतिरपि चेत् भवेत् सा प्रभावती आलक्ष्यताम्।—"जभौ सजौ गतिरुचिरा चतुर्ग्रहैः" इति मञ्जर्य्यादौ अस्याः अतिरुचिरेति नामान्तरं परिलक्ष्यते॥ ३३॥

आद्यमिति।—हे सुभाषिते! सुभाषिणि! हे सुदति! चेत् यदि आद्यं प्रथमं त्रितयं प्रथमं द्वितीयं तृतीयञ्च इत्यर्थः, अथ अनन्तरम् अष्टमं नवान्त्यं दशमम् इत्यर्थः, अन्त्यौ द्वौ द्वादशं त्रयोदशञ्च इत्यर्थः, गुरुविरतौ गुरुणा विशेषेण रतौ गुरुयुतौ इत्यर्थः स्यात्, अन्ये षट् वर्णाः लघव इति शेषः, तथा महेशनेत्रैः त्रिभिरित्यर्थः, दिग्भिर्दशभिश्च वर्णैरिति शेषः, विश्रामः भवति, ननु तदा सा प्रहर्षिणी विज्ञेया।—"त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्" इति मञ्जरी॥ ३४॥

चतुर्दशाक्षरपादं लक्षयति, आद्यमिति।—हे इन्दुवदने! कान्ते! यत्र आद्यं

पञ्चदशाक्षरा वृत्तिः ।

प्रथममगुरु षट्कं विद्यते यत्र कान्ते !
तदनु च दशमं चेदक्षरं द्वादशान्त्यम् ।
गिरिभिरथ तुरङ्गैर्यत्र कान्ते ! विरामः
सुकविजनमनोज्ञा मालिनी सा प्रसिद्धा ॥ ३६ ॥

सप्तदशाक्षरा वृत्तयः ।

सुमुखि ! लघवः पञ्च प्राच्यास्ततो दशमान्तिमः
तदनु ललितालापे ! वर्णौ तृतीयचतुर्थकौ ।
प्रभवति पुनर्यत्रोपान्त्यः स्फुरत्कनकप्रभे !
यतिरपि रसैर्वेदैरश्वैः स्मृता हरिणीति सा ॥ ३७ ॥
यदि प्राच्यो ह्रस्वः कलितकमले ! पञ्च गुरवः
ततो वर्णाः पञ्च प्रकृतिसुकुमाराङ्गि ! लघवः ।

---

प्रथमं, द्वितीयं, चतुर्थम्, अष्टमं, दशमान्त्यम् एकादशमित्यर्थः, उपान्त्यं त्रयोदशम्, अन्त्यं चतुर्दशञ्च चेत् गुरु, अन्ये सप्त वर्णाः लघव इति शेषः, अष्टाभिः षड्भिश्च विरतिर्विश्रामश्च भवति, तदा तं वसन्ततिलकं वदन्ति। किल निश्चये।—"ज्ञेयं वसन्ततिलकं तभजा जगौ गः" इति मञ्जरी ॥ ३५ ॥

पञ्चदशाक्षरपादं लक्षयति, प्रथममिति।—हे कान्ते ! यत्र प्रथमं षट्कं प्रथमावधि षष्ठवर्णपर्य्यन्तमित्यर्थः, तदनु तदनन्तरञ्च दशमं, द्वादशान्त्यं त्रयोदशमित्यर्थः, च अक्षरम् अगुरु लघ्वित्यर्थः विद्यते, यत्र च गिरिभिः पर्वतैः अष्टाभिरित्यर्थः, अथानन्तरं तुरङ्गैः अश्वैः सप्तभिरित्यर्थः, विरामः यतिः भवतीति शेषः, हे कान्ते ! सा सुकविजनानां मनोज्ञा मनोहारिणी मालिनी प्रसिद्धा।—"ननमयययुतेयं मालिनी भोगिलोकैः" इति वृ० र० ॥ ३६ ॥

अनतिप्रचलिततया षोड़शाक्षरपादं विहाय सप्तदशाक्षरपादमाह, सुमुखीति।—हे सुमुखि ! ललितालापे ! मधुरभाषिणि ! स्फुरन्ती कनकप्रभा काञ्चनप्रभा यस्याः तत्सम्बुद्धौ। यत्र छन्दसि प्राच्याः पूर्व्वे, पञ्च लघवः, ततः अनन्तरं दशमान्तिमः एकादशः, तदनु तदनन्तरं तृतीयचतुर्थकौ वर्णौ त्रयोदशः चतुर्दशश्चेत्यर्थः, पुनः उपान्त्यः षोड़शश्च लघुः प्रभवति, अन्ये अष्टौ गुरव इति शेषः, रसैः षड्भिः, वेदैश्चतुर्भिः, अश्वैः सप्तभिश्च यतिर्विश्रामोऽपि भवतीति शेषः, सा हरिणीति स्मृता कथिता।—"न समरसला गः षड्वेदैर्हयैर्हरिणी मता" इति मञ्जरी ॥ ३७ ॥

त्रयोऽन्ये चोपान्त्याः सुतनुजघने ! भोगसुभगे !
रसैरीशैर्यस्यां भवति विरतिः सा शिखरिणी ॥ ३८ ॥

द्वितीयमलिकुन्तले ! गुरु षडष्टमद्वादशं
चतुर्दशमथ प्रिये ! गुरु गभीरनाभिह्रदे ! ।
सपञ्चदशमान्तिमं तदनु यत्र कान्ते ! यतिः
गिरीन्द्रफणभृत्कुलैर्भवति सुभ्रु ! पृथ्वीति सा ॥ ३९ ॥

चत्वारः प्राक् सुतनु ! गुरवो द्वौ दशैकादशौ चेत्
मुग्धे ! वर्णौ तदनु कुमुदामोदिनि ! द्वादशान्त्यौ ।
तद्वच्चान्त्यौ युगरसहयैर्यत्र कान्ते ! विरामो
मन्दाक्रान्तां प्रवर-कवयस्तन्वि ! तां सङ्गिरन्ते ॥ ४० ॥

---

यदीति।—हे कलितकमले ! गृहीतपद्मे ! पद्मविलासिनि इत्यर्थः, प्रकृत्या स्वभावेन सुकुमारं सुकोमलम् अङ्गं यस्याः तत्सम्बुद्धौ। हे सुतनुजघने ! शोभनाङ्गजघने ! भोगसुभगे ! सम्भोगसुखदायिनीत्यर्थः, यस्याः प्राच्यः प्रथमः, ह्रस्वः लघुरित्यर्थः, ततः पञ्च गुरवः, ततः अनन्तरं पञ्च वर्णाः लघवः, अन्ये उपान्त्याश्च त्रयः चतुर्दशपञ्चदशषोडशा इत्यर्थः लघवः, अन्ये त्रयो गुरव इति शेषः, तथा रसैः षड्भिः, ईशैः एकादशभिः विरतिः, सा शिखरिणी भवति।—"रसै रुद्रैश्छिन्ना यमनसभलाः गः शिखरिणी" इति मञ्जरी ॥ ३८ ॥

द्वितीयमिति।—हे अलिकुन्तले ! भ्रमरनीलकेशि ! गभीरनाभिह्रदे ! सुभ्रु ! प्रिये ! कान्ते ! यत्र द्वितीयं षडष्टम-द्वादशं षष्ठम् अष्टमं द्वादशञ्चेत्यर्थः गुरु, अथ अनन्तरं चतुर्दशं तदनु सपञ्चदशमम् अन्तिमञ्च पञ्चदशं सप्तदशञ्चेत्यर्थः गुरु, अन्ये दश वर्णाः लघव इति शेषः, गिरीन्द्रफणभृत्कुलैः अष्टाभिः नवभिश्चेत्यर्थः यतिः, सा पृथ्वीति भवति।—"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति मञ्जरी ॥ ३९ ॥

चत्वार इति।—हे सुतनु ! मुग्धे ! कान्ते ! यत्र प्राक् प्रथमं चत्वारः वर्णाः गुरवः, तदनु तदनन्तरं चेत् यदि दशैकादशौ द्वौ दशमः एकादशश्चेत्यर्थः वर्णौ, द्वादशान्त्यौ त्रयोदशश्चतुर्दशश्चेत्यर्थः, तद्वत् तथा अन्त्यौ षोडशः सप्तदशश्चेत्यर्थः, गुरू भवत इति शेषः, अन्ये सप्त लघव इति शेषः, तथा युगरसहयैः चतुर्भिः षड्भिः सप्तभिश्चेत्यर्थः विरामः, हे कुमुदामोदिनि ! तन्वि ! प्रवरकवयः कविश्रेष्ठाः तां मन्दाक्रान्तां सङ्गिरन्ते प्रतिजानते। "समः प्रतिज्ञाने" (१।३।५२ पा०) इत्यात्मनेपदम्।—"मन्दाक्रान्ता जलधिषडगैः म्भौ नतौ ताद् गुरू चेत्" इति वृ० र० ॥ ४० ॥

एकोनविंशत्यक्षरा वृत्तिः ।

आद्यं यत्र गुरु त्रयं प्रियतमे ! षष्ठं ततश्चाष्टमं
सङ्ख्येकादशतस्त्रयस्तदनु चेदष्टादशाद्यान्तिमाः ।
मार्त्तण्डैर्मुनिभिश्च यत्र विरतिः पूर्णेन्दुबिम्बानने !
तद् वृत्तं प्रवदन्ति काव्यरसिकाः शार्दूलविक्रीड़ितम् ॥ ४१ ॥

एकविंशत्यक्षरा वृत्तिः ।

चत्वारो यत्र वर्णाः प्रथममलघवः षष्ठकः सप्तमोऽपि
द्वौ तद्वत् षोड़शाद्यौ मृगमदतिलके ! षोड़शान्त्यौ तथान्त्यौ ।
रम्भास्तम्भोरुकान्ते ! मुनिमुनिमुनिभिर्दृश्यते चेद्विरामो
बाले ! वन्द्यैः कवीन्द्रैः सुतनु ! निगदिता स्रग्धरा सा प्रसिद्धा॥४२॥

इति श्रीकालिदासविरचितः श्रुतबोधः ।

---

अत्रापि सर्वत्र अप्रचरद्रूपतया सप्तदशाक्षर-चरणानन्तरमेव एकोनविंशत्यक्षर-पाद-माह, आद्यमिति ।—हे पूर्णेन्दुबिम्बानने ! पूर्णचन्द्रमुखि ! प्रियतमे ! यत्र आद्यं त्रयं षष्ठं ततश्च अष्टमं गुरु, तदनु एकादशतः एकादशात् परं चेत् त्रयः द्वादश-त्रयोदशचतुर्दशा इत्यर्थः, तथा अष्टादशाद्यान्तिमाः अष्टादशस्य आद्यौ अन्तिमश्च षोड़शः सप्तदशः एकोनविंशश्चेत्यर्थः, गुरवः भवन्तीति शेषः, अन्ये अष्टौ वर्णाः लघव इति शेषः, यत्र च मार्त्तण्डैः सूर्य्यैः द्वादशभिरित्यर्थः, मुनिभिः सप्तभिश्च विरति-र्विश्रामः ; काव्यरसिकाः तत् वृत्तं शार्दूलविक्रीड़ितं प्रवदन्ति ।—"सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीड़ितम्" इति मञ्जरी ॥ ४१ ॥

एकविंशत्यक्षरपादमाह, चत्वार इति ।—हे मृगमदतिलके ! रम्भास्तम्भौ इव यौ ऊरू ताभ्यां कान्ता मनोहरा तत्सम्बुद्धौ । बाले ! सुतनु ! शोभनाङ्गि ! यत्र प्रथमं चत्वारो वर्णाः षष्ठकः सप्तमः तद्वत् षोड़शाद्यौ द्वौ चतुर्दशः पञ्चदशश्चेत्यर्थः, षोड़शान्तौ सप्तदशः अष्टादशश्चेत्यर्थः, तथा अन्त्यौ विंशः एकविंशश्चेत्यर्थः, अलघवः गुरव इत्यर्थः, अन्ये नव लघव इति शेषः, तथा सप्तभिः सप्तभिः सप्तभिः चेत् यदि विरामः दृश्यते, तदा वन्द्यैः कवीन्द्रैः स्रग्धरा प्रसिद्धा सा निगदिता उक्ता ।—"म्रभ्नै-र्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति मञ्जरी ॥ ४२ ॥

इति पण्डितकुलपतिना श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्येण विरचिता श्रुतबोधव्याख्या ।

---

समाप्तोऽयं ग्रन्थः ।